सात्मकोऽशुचिः। हर्षशोकान्वित कर्त्ता राजस परिकीर्त्तित॥२७॥ अयुक्त प्राकृत स्तब्ध शठो नैष्कृतिकोऽलस। विषादी दीर्घसूत्री च कर्त्ता तामस उच्यते॥२८॥ बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु। प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय॥२९॥ प्रवृत्तिञ्च निवृत्तिञ्च कार्य्याकार्य्ये भयाभये। बन्धं मोक्षञ्च या वेत्ति बुद्धि सा पार्थ सात्त्विकी॥३०॥ यया धर्ममधर्मञ्च कार्य्यञ्चाकार्य्यमेव च। अयथावत् प्रजानाति बुद्धि सा पार्थ राजसी॥३१॥ अधर्मं धर्ममिति या मन्यते तमसावृता। सर्व्वार्थान्वि

## भाषा अनुवाद

गुणी है॥२७॥ और अयुक्त कहे असावधान औ प्राकृत कहे विवेक रहित औ स्तब्ध अनम्र स्वभाव औ शठ कहे कर्मचोर औ नैष्कृतिक कहे परका अपमान करनेवाला तथा आलसी औ विषाद या सदा शोगी औ दीर्घसूत्री कोहे जो कर्म तुर्त करने का होय उसे महीनो तकटालै ऐसे मनुष्य तामसकर्त्ता कहावते है ऐसे ही कर्त्ताकी त्रैविध्य से ज्ञाताभी तीन प्रकारके है और कर्म की त्रैविध्यसे ज्ञेयमात्र को त्रैविध्य कहा औ बुद्धि त्रिविध कहने से कारण भी तीन प्रकार के है॥२८॥ अब बुद्धि औ धृति कहे धैर्यकी त्रैविध्य कहनेकी प्रतिज्ञा करते है कि हे धनञ्जय अर्जुन बुद्धि के औ धैर्यके सत्व आदि गुण क्रमसे तीन भेद जो है उन को मै भिन्न भिन्न कहता हूं तुम सावधान होय सुनो॥२९॥ अब इस श्लोक से ले तीन श्लोकसे बुद्धि की त्रैविध्य कहते है कि धर्म मे प्रवृत्ति औ अधर्म से निवृत्ति औ देश कालके अनुसार जो कर्त्तव्य औ अकर्त्तव्यकर्म औ काल अकाल जानि अर्थ अनर्थ ज्ञान तथा बन्ध ही कैसे औ मोक्ष ही वा कैसे होतो इस विचार से भय अभय ये सब बुद्धि कहे अन्तःकरण जानि सके है ऐसो बुद्धि सात्विकी है इस जगह बुद्धि के द्वारा पुरुष सबजानता है यह कहनेको ये परवह रीतिछोड इसीतरह परकहा कारण को कर्त्ता करके कहा है॥३०॥ और हे पार्थ अर्जुन जिस बुद्धि से धर्म अधर्म औ काल अकाल अयथावत् कहे ठीक ठीक नजाना जाय जिससे सो बुद्धि राजसी है॥३१॥ और तमोगुणसे आवृत कहे घेरी जो बुद्धि अधर्मको भी जानि धर्मके सकल विषय को विपरीत कहे उलटा जाने ऐसी विपरीत ग्रहण करनेवाली बुद्धि तामसी है यहां भी करणता बुद्धि की उचित थी पर कर्त्तारूप से कहा है अथवा धर्म

परीतान्बुद्धि सापार्थतामसी ॥ ३२ ॥ धृत्यायया धारयतेमनःप्राणेन्द्रियक्रिया।
योगेनाव्यभिचारिण्याधृतिःसापार्थसात्त्विकी ॥ ३३ ॥ ययातुधर्मकामार्थान्धृत्याधा
रयतेऽर्जुन। प्रसङ्गेनफलाकाङ्क्षीधृतिःसापार्थराजसी ॥ ३४ ॥ ययास्वप्नंभयंशोकं
विषादंमदमेवच। नविमुञ्चतिदुर्मेधाधृतिःसातामसीमता ॥ ३५ ॥ सुखंत्विदानीं
त्रिविधंशृणुमेभरतर्षभ। अभ्यासाद्रमतेयत्रदुःखान्तञ्चनिगच्छति ॥ ३६ ॥ तदग्रे
विषमिवपरिणामेऽमृतोपमं। तत्सुखंसात्त्विकंप्रोक्तमात्मबुद्धिप्रसादजं ॥ ३७ ॥

भाषा अनुवाद

अन्त करण की वृत्ति बुद्धि औ निश्चय तथा इच्छा द्वेष आदि रूप अन्त करण की वृत्ति बहुत रहते भी धर्म अधर्म औ भय अभय की साधनरूप बुद्धि को प्रधान किया है और सब उपलक्षणरूपसे त्रिविध कहे गये हैं ॥३२॥ अब इस श्लोक को अवधिकर तीन श्लोकसे धृतिको त्रैविध्य कहते हैं कि हे अर्जुन योग कहे चित्त की एकाग्रता से और और विषय का धारण न करके जो धैर्य से मन औ प्राण तथा सब इन्द्रियों को सकल क्रिया की जुड़ई जायं वही धृति सतोगुणी है ॥ ३३ ॥ अब राजसी धृति कहते हैं कि हे अर्जुन तिससे भिन्न जा धृति कि जिस से धर्म अर्थ औ काम सब श्रेष्ठरूप से धारण किये जाय परित्यक्त न होय और उन के सङ्गम से धर्मादि के फल की आकांक्षी भी होय ऐसी धृति का नाम राजसी है ॥ ३४ ॥ अब तामसी धृति कहते हैं कि हे अर्जुन जिस मनुष्य को दुर्मेधा कहे अविवेकिनी नीच बुद्धि है और वह दुर्बुद्धि मनुष्य जिस धृति कहे धैर्य से निद्रा औ भय शोक तथा विषाद कहे दुख औ मद इनको नहीं छोड़ता है वह धृति तामसी है ॥३५॥ अब सुख भी तीन प्रकार का है यह प्रतिज्ञा आधे श्लोक से कहते हैं कि हे भरत वंशी अर्जुन अब त्रिविध सुख भी हम से सुनो कि जो पुरुष नित्य अभ्यास के हेतु से सुखभोग करता है और विषयी लोगों के समान विषय वासना से अति हठ धर करके सुख [illegible] नहीं करता औ प्रीति को नहीं प्राप्त होता है वैसा जो सुख भोगी पुरुष सो हठा[illegible] फलको प्राप्त होता अर्थात् दुखसे छूट जाता है ॥३६॥ और वह सुख कैसा है इस पर कहते हैं कि जो सुख आगे कहे प्रथम विषके तुल्य है औ अन्त को अमृत समान होता है वह सुख सात्त्विक है और आत्मा तथा

विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमं। परिणामेविषमिवतत्सुखंराजसंस्मृतं॥३८॥
यदग्रेचानुबन्धेचसुखंमोहनमात्मनः। निद्रालस्यप्रमादोत्थंतत्तामसमुदाहृतं॥३९॥
नतदस्तिपृथिव्यांवादिविदेवेषुवापुनः। सत्त्वंप्रकृतिजैर्मुक्तंयदेभिःस्यात्त्रिभिर्गुणैः॥
४०॥ ब्राह्मणक्षत्रियविशांशूद्राणाञ्चपरन्तप। कर्माणिप्रविभक्तानिस्वभावप्रभवैः

भाषा अनुवाद

बुद्धि की प्रसन्नता से उत्पन्न है अर्थात् मलरूप रजोगुण तिनको तमोगुण सतो गुण दूर करे है तब यह सुख प्रगटै है॥३७॥ अब राजस सुख कहते हैं कि विषय वासना सहित इन्द्रियों के संयोग से जो प्रिय सङ्गम आदि सुख होता है और पहले तो अमृत तुल्य लगता है औ अन्त को दुख दाई हेतु से विष समान होता सोई सुख राजस है॥३८॥ तामस सुख कहते हैं कि अग्रे कहे पहिले और अनुबंध कहे पीछे भी जो सुख मोहकारी विशेष से निद्रा औ आलस्य तथा प्रमाद कहे चित्त की असावधानी औ मन की जड़ता से जो सुख होय है सोई तामस सुख है॥३९॥ अब जो पूर्व अध्यायों में कहीं नहीं कहा सो इस श्लोक से ले तीन श्लोक से कहते हैं कि इन सतोगुण आदि प्रकृति के गुणों से मुक्त अर्थात् छूटा हुआ सत्व आदि कहे प्राणीमात्र नहीं है अथवा और कोई वस्तु क्या पृथिवी मे मनुष्य आदि क्या स्वर्ग मे देवता आदिमे भी कोई नहीं है॥४०॥ जो समस्त क्रिया औ कारक कहे क्रियों के साधन तथा फल आदि औ प्राणीमात्र सब भी त्रिगुणात्मक कहे त्रिगुणमय भये हैं तो इन लोगों की मुक्ति कैसे घटै कहे होय सकै है इस शङ्का निवारण के अर्थ अपने अपने अधिकार अनुसार कर्म अनु ष्ठान के द्वारा भगवत आराधन से भई हुई भगवत की कृपा प्राप्ति से प्रगट जो तत्वज्ञान तिसके द्वारा ही जो मुक्ति होयगी यह जो सब गीता का सारसंग्रह है सो देखावनेका मानसकरके इसश्लोकसे ले अध्यायसमाप्ति पर्यन्त प्रकारान्तर कहे दूसरी रीत कहने का आरम्भ करते हैं कि हे परन्तप शत्रुनाशक अर्जुन ब्राह्मण क्षत्रिय वैश्य औ शूद्र इन के कर्म प्रविभक्त कहे प्रकाष्ट रूप से भिन्न भिन्न विहित हैं और, द्विज पद से शास्त्र मे ब्राह्मण आदि तीन वर्ण कहे जाते हैं इस से शूद्र को अलग करके कहा है सोई लक्षण कहते हैं कि स्वभाव कहे सतोगुण

गुणैः ॥ ४१ ॥ शमोदमस्तपःशौचंक्षान्तिरार्जवमेवच। ज्ञानंविज्ञानमास्तिक्यंब्रह्म
कर्मस्वभावजं ॥ ४२ ॥ शौर्य्यंतेजोधृतिर्दाक्ष्यंयुद्धेचाप्यपलायनं। दानमीश्वरभाव
श्चक्षत्रकर्मस्वभावजं ॥ ४३ ॥ कृषिगोरक्ष्यवाणिज्यंवैश्यकर्मस्वभावजं। परिचर्य्या

भाषा अनुवाद

आदि जिनसे सबका प्रभव कहे उत्पत्ति है उन्हींके अनुसार ब्राह्मण आदिके कर्म पृथक पृथक विहित है अथवा स्वभाव कहे पूर्व जन्मका संस्कार उसके अनुसार जो ब्राह्मण आदि की गुणक्रम से कर्मों मे प्रवृत्ति है विशेष यह कि ब्राह्मण सतोगुण प्रधान है औ क्षत्रिय कुछ सतोगुण सहित रजोगुण प्रधान है और वैश्य कुछ सतोगुण तमोगुण ले कर रजोगुण प्रधान है और शूद्र कुछ रजोगुण युक्त तमोगुण प्रधान है यह जानो ॥ ४१ ॥ तो वे स्वाभाविक कौन कर्म हैं सोई कहते है कि शम कहे चित्त की शान्ति औ दम कहे वाह्य इन्द्रियों की शान्ति औ तप जो १७ अध्याय के १४ स्लोक मे शरीर की तपस्या कहा है तथा शौच अर्थात् वाहर भीतर की शुद्धि औ क्षान्ति कहे क्षमा आर्जव कहे सोधापन औ ज्ञान कहे शास्त्र के अर्थ का वोध और विज्ञान कहे अनुभव तथा आस्तिक्य कहे परलोक है ऐसी निश्चय रूप वुद्धि ये सव ब्राह्मणों के स्वभाव सिद्ध कर्म हैं सो जानो ॥ ४२ ॥ अब क्षत्रिय के स्वभावज जो कर्म उनको कहते है कि शौर्य कहे पराक्रम औ तेज कहे ढीठापन धृति कहे धैर्य औ दाक्ष्य कहे निपुणता और संग्राम आन पडने से पीठिदे न भागना तथा दान कहे उदारता औ ईश्वर भाव अर्थात् विषय सम्बन्धी नियम आदि करने की शक्ति ये सव क्षत्रियों के स्वभाव ही से उत्पन्न कर्म है ॥ ४३ ॥ अव वैश्यके स्वभावज कहे स्वभाव सिद्ध कर्म कहते है कि कृषी कहे खेती औ गो रक्षा सो दो प्रकार की है एक तो गऊका रक्षण दूसरा अपने आश्रितका पालन करना औ वाणिज्य व्यापार खरीदना वेचना तथा ब्राह्मण देवता मे श्रद्धा रखना ये सव वैश्यवंश के स्वाभाविक कर्म हैं अव शूद्र का कर्म सुनो कि इन तीनो वर्ण की सेवारूप व्यापार शूद्रका स्वभावज कर्म है शूद्र को सेवा छोड और कर्म नहीं है ॥ ४४ ॥ ब्राह्मण आदि वर्णों के इन सव कर्मों को ज्ञान का हेतुत्व कहते हैं कि अपने अपने अधिकार

त्मकंकर्मशूद्रस्यापिस्वभावजं ॥ ४४ ॥ स्वेस्वेकर्मण्यभिरतःसंसिद्धिंलभतेनरः। स्व
कर्मनिरतःसिद्धिंयथाविन्दतितच्छृणु॥ ४५ ॥ यतःप्रवृत्तिर्भूतानांयेनसर्वमिदंततं।
स्वकर्मणातमभ्यर्च्यसिद्धिंविन्दतिमानवः॥ ४६ ॥ श्रेयान्स्वधर्मोविगुणःपरधर्मात्स्व
नुष्ठितात्। स्वभावनियतंकर्मकुर्वन्नाप्नोतिकिल्बिषं॥ ४७ ॥ सहजंकर्मकौन्तेय

## भाषा अनुवाद

के अनुसार विहित कर्म मे निरत कहे निष्ठा से लगे ज्ये मनुष्य संसिद्ध कहे ज्ञान की योग्यता लाभ करते हैं और कर्म के द्वारा ज्ञान प्राप्ति की प्रकार इस श्लोक के आधे से ले डेढ़ श्लोक से कहते हैं कि अपने कर्म से सब तरह निष्ठायुक्त पुरुष जिस प्रकार से तत्त्वज्ञान लाभ करते है सो प्रकार तुम श्रवण करो ॥४५॥ अब कर्म से ज्ञान प्राप्ति का प्रकार कहते हैं कि अन्तर्यामी रूप जो परमेश्वर कि जिस से प्राणी मात्र चेष्टा करते हैं और कारण स्वरूप जो ईश्वर कि जिस ईश्वर से यह समस्त जगत व्याप्त है उस ईश्वर को समस्त कर्म के द्वारा अभ्यर्च्य कहे पूजन करके मनुष्य सम्पूर्ण ज्ञान की योग्यता रूप सिद्धि को प्राप्त होते हैं ॥ ४६ ॥ और पूर्व श्लोक मे कहा जो स्वकर्मणा तमभ्यर्च्य उसी स्वकर्म विशेषण वचन का फल कहते हैं कि स्वानुष्ठित कहे अच्छीतरह से किये ज्ये पराये के धर्म की अपेक्षा से स्वधर्म कहे अपना धर्म विगुण अर्थात् अङ्गहीन भी श्रेय कहे अति उत्तम है इस हेतु बन्धुवध आदि से युक्त भी क्षत्री का धर्म जो युद्ध तिस से भिक्षाटन स्वरूप पर धर्म श्रेष्ठ नहीं है और पूर्वोक्त स्वभाव क्रम से नियत कहे नियम स्वरूप शास्त्रोक्त स्वधर्म का अनुष्ठान कर्त्ता ज्या कोई भी पुरुष किल्बिष जो पाप तिस को नहीं प्राप्त होता है सो अर्जुन तुम किस विचार के बखेडे मे पडे हौ अपने काम को देखो इस चिन्ता से कुछ फल नहीं हैं ॥४७॥ परन्तु स्वधर्म से जो सांख्यमत के अनुसार हिंसा को दोष रूप जानि के औ अहिंसा हेतु से परधर्म श्रेष्ठ जो विचार करो तौ परधर्म के आचरण मे भी दोष हैं इस अभिप्राय पर कहते है कि हे कौन्तेय अर्जुन मनुष्यों को सहज कहे स्वभावसिद्ध औ शास्त्रविहित जो स्वधर्म सो दोषयुक्त होने से भी त्याग करने योग्य नहीं है क्योंकि समस्त आरम्भ अर्थात् दृष्ट अदृष्ट

सदोषमपिनत्यजेत् । सर्वारम्भाहिदोषेणधूमेनाग्निरिवावृता ॥ ४८ ॥ असक्त
बुद्धि:सर्वत्रजितात्माविगतस्पृहः । नैष्कर्म्यसिद्धिंपरमांसंन्यासेनाधिगच्छति ॥४९॥
सिद्धिंप्राप्तोयथाब्रह्मतथाप्नोतिनिबोधमे । समासेनैवकौन्तेयनिष्ठाज्ञानस्ययापरा ॥
॥५०॥ बुद्ध्याविशुद्धयायुक्तोधृत्यात्मानंनियम्यच । शब्दादीन्विषयांस्त्यक्त्वारागद्वेषौ

भाषा अनुवाद

कर्ममात्र सब दोषयुक्त है तो जैसे स्वाभाविक धूम से आवृत अग्निको दोषयुक्त रहते भी लोग धूम रूप दोष परित्याग करके केवल अन्धकार औ शीत वारण के अर्थ सेवन करते हैं तैसे ही स्वकर्म भी दोष अंश को छोडके गुण अंश मात्र सत्वबुद्धिके अर्थ सेवन करने योग्य है सोई कहा कि हे अर्जुन सहज कहे स्वाभाविक दोषयुक्त भी अपना कर्म छोडना न चाहिये क्यों कि सब आरम्भ कहे कर्म सदोष है जैसे धूम दोष से युक्त अग्नि को कौन छोड देय है ॥४८॥ जो कहो कि दोष अंश छोडि के गुण मात्र ही ग्रहण करि के कर्म किस प्रकार किये जाय सकेंगे इस अपेक्षा पर कहते हैं कि जिन की बुद्धि असक्त कहे आसक्ति रहित है और जितात्मा अर्थात् जो निरहङ्कार है और जिनकी इच्छा कर्म के फल से दूर होगई है ऐसे पुरुष सङ्ग जो आसक्ति औ फल इन दोनो को भी छोडकर इस अध्याय के नवम श्लोकमे कहे अनुसार आसक्ति औ फल त्यागरूप संन्यासके द्वारा परम नैष्कर्म्य सिद्धि कहे सर्व कर्म निवृत्तिरूप जो सत्वशुद्धि सो पावते हैं ॥४९॥ पूर्वोक्त ऐसे परमहंस पुरुष को ज्ञाननिष्ठाके क्रम से ब्रह्मभाव की प्राप्ति का प्रकार इस श्लोक से ले साठि के श्लोक तक कहते हैं कि हे कौन्तेय अर्जुन नैष्कर्म्यसिद्धि को प्राप्त करके ज्ञानविषयक प्रकृष्टनिष्ठा से जैसे पुरुष ब्रह्म को प्राप्त होते हैं सो प्रकार संक्षेप मे श्रवण करो अर्थात् ज्ञान की जो श्रेष्ठ निष्ठा है सो सुनो ॥५०॥ सोई कहते हैं कि उक्त प्रकार क्रमसे पूर्वोक्त विशुद्धस्वरूप सात्विक बुद्धियुक्त पुरुष सात्विकी धृति से आत्मा कहे इस बुद्धि को नियम्य कहे निश्चय करके शब्द आदि सर्व विषय का त्याग करनेके अनन्तर और विषयप्रयुक्त राग द्वेषको भी दूरकरके ब्रह्मभावको प्राप्तहोतेहैं इसश्लोकसे ले तीन श्लोकका अर्थ एकसाथ होताहै ॥५१॥ विविक्त सेवी कहे पवित्र देशवासी और लध्वासी कहे परिमित आहारकारी होय

व्युदस्यच ॥५१॥ विविक्तसेवीलघ्वाशीयतवाक्कायमानसः। ध्यानयोगपरोनित्यंवैरा
ग्यंसमुपाश्रितः ॥५२॥ अहङ्कारंबलंदर्पंकामंक्रोधंपरिग्रहं। विमुच्यनिर्ममःशा
न्तोब्रह्मभूयायकल्पते ॥५३॥ ब्रह्मभूतःप्रसन्नात्मानशोचतिनकांक्षति। समःसर्वेषु
भूतेषुमद्भक्तिंलभतेपरां ॥ ५४ ॥ भक्त्यामामभिजानातियावान्यश्चास्मितत्त्वतः।
ततोमांतत्त्वतोज्ञात्वाविशतेतदनन्तरं ॥५५॥ सर्वकर्माण्यपिसदाकुर्वाणोमद्व्यपाश्रयः

## भाषा अनुवाद

और इन उपायों से यत वाक् काय मानस अर्थात् वचन देह और मन को वश करके सदा ध्यान क्रम से जो योग कहे अविद्या अज्ञान निवृत्तिरूप ब्रह्म साक्षात् कार तिसमे तत्पर होय अपने ध्यान के अविच्छेद के लिये सम्पूर्णरूप से वारवार दृढ वैराग्य का आश्रय लेकर ॥५२॥ और अहङ्कार औ वल कहे निंद्यवस्तु की इच्छा औ दर्प कहे योगवल से आकाश गमनरूप आदि मायामे प्रवृत्ति और प्रार ब्धवशते अप्राप्य वस्तु मे जो काम क्रोध का रोकना और अदृष्टवशते हठात् प्राप्त वस्तु मे भी ममता रहित होके शान्ति को प्राप्त पुरुष ब्रह्म के साथ समता अर्थात् अहंब्रह्म ऐसा अचलरूप अवस्थान करनेके योग्यहै ॥५३॥ अहं ब्रह्म ऐसी निश्चय रूप अवस्थिति का फल कहते है कि ब्रह्मभूत कहे ब्रह्मभाव को प्राप्त प्रसन्न चित्त पुरुष देह आदिमे अभिमानके अभावसे नष्ट जो संसारीविषय तिनका शोच नहीं करते है और अप्राप्त विषय की भी आकांक्षा नहीं करते इसी से रागद्वेषादिजात विक्षेप के अभाव से भूतमात्र मे समभावयुक्त होने के अनन्तर सकल प्राणीयों मे मद्भावरूप जो मेरी उत्तमभक्ति तिसको प्राप्त होते है ॥५४॥ तिसके अनन्तर वही उत्तम भक्तिके द्वारा हम को यथार्थरूपसे जानते है और मै कैसा हूं इस अपेक्षा पर कहते है कि जिस रूप से हम सर्वव्यापी औ घनचिदानन्दस्वरूप हैं तैसा हम को जानते है और तिस के अनन्तर हम को ऐसे यथार्थरूप से जानि कै फेर उस ज्ञान के उपर कहे शान्त होने पर हमारे ही मे प्रवेश करते अर्थात् परमा नन्दस्वरूप होते है ॥५५॥ अपने अधिकार के अनुसार कर्मके क्रमसे भगवत की आराधना हेतु से कहा जो मुक्ति का प्रकार सो कहते है कि नित्य औ नैमित्तिक पूर्व कहे उन्ये सर्व कर्मका निरन्तर अनुष्ठानकारी और मत् व्यापाश्रय कहे जिस

मत्प्रसादादवाप्नोतिशाश्वतंपदमव्ययं ॥५६॥ चेतसासर्वकर्माणिमयिसंन्यस्यमत्परः।
बुद्धियोगमुपाश्रित्यमच्चित्तःसततंभव ॥५७॥ मच्चित्तःसर्वदुर्गाणिमत्प्रसादात्तरिष्य
सि। अथचेत्त्वमहङ्कारान्नश्रोष्यसिविनङ्क्ष्यसि ॥५८॥ यदहङ्कारमाश्रित्यनयोत्
स्यइतिमन्यसे। मिथ्यैवव्यवसायस्तेप्रकृतिस्त्वांनियोक्ष्यति ॥५९॥ स्वभावजेनकौन्ते

भाषा अनुवाद

के मै ही आश्रयणीय हौं और स्वर्ग आदि फल आश्रयणीय नहीं है ऐसे पुरुष मेरी अनुग्रह से सास्वत अर्थात् अनादि औ अव्यय कहे नित्य जो सर्व श्रेष्ठ ब्रह्मपद तिसको प्राप्त होते है ॥ ५६ ॥ जिस हेतु नित्य आदि कर्म के अनुष्ठान से ब्रह्म प्राप्ति होती है इस से सर्व कर्म बुद्धि के द्वारा हम को समर्पण करि के मत्पर कहे मही हौं परम प्रार्थनीय प्राप्य परम पुरुषार्थ सर्वस्वरूप जिस के अथवा व्यवसायात्मिका बुद्धि के कर्मयोग को आश्रय कर के सतत कहे कर्म अनुष्ठान काल मे भी मद्गतचित्तपुरुष ब्रह्मार्पणं ब्रह्महविःब्रह्माग्नौ ब्रह्मणाहुतं इस ४ अध्यायके २४ श्लोक मे कहे हुये ज्ञानके द्वारा मेरे मे चित्त समर्पित होता है सो हे अर्जुन तुम बुद्धियोग से तद्रूप समचित्त होउ ॥ ५७ ॥ और समचित्त होने से जो होगा सो सुनो तात्पर्य यह कि मद्गतचित्त हो के मेरी कृपा से तावत दुर्ग अर्थात् दुस्तर सांसारिक दुख समूह से तरि जावगे और इस के विपरीत आच रण मे दोष कहते है कि और जो इस प्रकार कहने पर भी तुम अपने अहंकार अर्थात् हम बडे ज्ञानी इस अभिमानसे हमारे कहने पर कान न करोगे तो पुरुष को उचित औ हित करनेवाला जो धर्म तिस से भ्रष्ट होउगे अर्थात् विनष्ट हो जावगे औ दुर्गति भी भोगना पडेगा ॥५८॥ और जो कहो कि अच्छा हम धर्म से भ्रष्ट होय परन्तु तौ भी भाई और बन्धुवों के साथ युद्ध न करैंगे तिस पर कहते है कि मेरी कही सब बातो को अनादर पूर्वक अहङ्कारके भरोसे जो कहो कि मै युद्ध न करूंगा ऐसी जो तुम मनमे निश्चय करते हौ तो तुमारा यह निश्चय करना स्वाधीनता के अभाव हेतुसे अर्थात् तुम स्वाधीन नही हौ इससे यह बात मिथ्या कहे झूठमूठहै सोई कहतेहै कि जो तुमारीप्रकृति कहे क्षत्रीको रजोगुण, की अधिकाई सो तुम को अवश्यही युद्धमे प्रवृत्त करैगी अन्त को भय मारोगे औ

र्त्वनिबद्धःस्वेनकर्मणा। कर्तुंनेच्छसियन्मोहात्करिष्यस्यवशोऽपितत् ॥६०॥ ईश्वरः
सर्वभूतानांहृद्देशेऽर्जुनतिष्ठति। भ्रामयन्सर्वभूतानियन्त्रारूढानिमायया ॥६१॥
तमेवशरणंगच्छसर्वभावेनभारत। तत्प्रसादात्परांशान्तिंस्थानंप्राप्स्यसिशाश्वतं॥

भाषा अनुवाद

लड़ोगे और इस मीटने के मीटने से केवल जगत मे दुर्यश छोड और कुछ हाथ लागना नहीं है यह जानो ॥५९॥ और हे कौन्तेय कुन्तीनन्दन अर्जुन स्वभाव कहे जो पूर्व कर्म का संस्कार जिससे रजोगुण विशिष्ट क्षत्री के जामा को प्राप्त हो और शूरता आदिगुण कर्म से निवद्ध कहे वशीभूत तुम मोहके मारे जो इस समयमे युद्ध कर्मकरनेकी इच्छा नहीं करते हो पर इसके वाद अवश होय यही कर्म अवश्यही करोगे इसमेकुछभी झूठ न मानो ॥६०॥ इससे पिच्छिले दोनोश्लोकमे सांख्य आदि मतानुसारी मनुष्योकी प्रकृतिपारतंत्र्य कहे स्वभावाधीनता कही गई अब दो श्लोक से निज कहे अपना मत कहते है कि हे अर्जुन सकल भूतोंके हृदय मे नियामक रूपसे अन्तर्यामी ईश्वरस्थिति करते है तो किस प्रकार से टिके है इस आकांक्षा पर कहते है कि भूतमात्र को माया जो अपनी शक्ति तिस के ओर से भ्रमण कहे उपस्थिति समस्त कर्मोमे प्रवृत्त करावते भये सबमे टिकेहै जैसे काठपुतली को सूत्र धार वाजीगर लोग लोगों के सामने नचावैहै अथवा यन्त्र कहे शरीरआरूढ कहे जीव को भ्रमण करावते स्थिति करते है इस पर श्वेताश्वतर उपनिषद के मन्त्र का प्रमाण देते है कि एक स्वयं प्रकाश जो परमात्मा सो भूतो मे निगूढभाव से स्थित औ सर्वव्यापी सब का अन्तर्यामी औ कर्मो का नियन्ता औ भूतों का आधार रूप औ द्रष्टा देखनेवाला औ भूतमात्र को चेतनकारी अद्वितीय औ गुणातीत है और अन्तर्यामी जो बुद्धि मे स्थिति करके बुद्धि का नियम करै है और जिस को बुद्धि नहीं जानती और बुद्धि ही जिसकी उपाधिहै सोई तुमारेभी आत्मा औ अन्तर्यामी तथा कैवल्यस्वरूप है ॥६१॥ जब कि ईश्वर ही सर्व्वभूतमात्र का प्रेरक है और उसी की प्रेरणासे सकल कर्म प्राणी करते है तो फेरि अपना पुरुषार्थ करना वृथा है इस अभिप्राय से कहते है कि जिस हेतुसे जीवमात्र परमेश्वर के वशीभूत हैं इससे हे भारत अर्जुन तुम अहङ्कार को परित्याग करके सम्यक प्रकारसे

६२॥ इतितेज्ञानमाख्यातंगुह्याद्गुह्यतरंमया।विमृश्यैतदशेषेणयथेच्छसितथाकुरु।
॥६३॥ सर्वगुह्यतमंभूयःशृणुमेपरमंवचः। इष्टोऽसिमेदृढमितिततोवक्ष्यामितेहि
तं॥६४॥ मन्मनाभवमद्भक्तोमद्याजीमांनमस्कुरु। मामेवैष्यसिसत्यंतेप्रतिजानेप्रि

भाषा अनुवाद

ईश्वर की शरण ग्रहणकरो तदनन्तर तिनकी कृपासे परां कहे उत्तम शान्ति औ परमेश्वरसम्बन्धीनित्य जो स्थान सो पाओगे यह भगवाने अर्जुनसे कहा॥६२॥ अब समस्त भगवद्गीता का अर्थ कहे तात्पर्य कहते हैं कि इस प्रकार से मैं ने दया कर के तुम को ज्ञान उपदेश दिया और सो ज्ञान कैसा है इस अपेक्षा से कहते है कि गुह्य कहे गोपन करने योग्य तथा मन्त्रयोग आदिसे भी जो ज्ञान गुह्यतर अति रहस्य है सोई मैने कहा इससे तुम गीताशास्त्रको पहिले अच्छीतरह आलो चन कर के फेर तुमारी जैसी इच्छा होय तैसा करो भावार्थ यह कि इस गीता के अर्थको विचार करने से अवश्य ही तुमारा मोह निवृत्त हो जायगा यह भग वानने कहा॥ ६३ ॥ अति गूढ अर्थ से युक्त जो गीताशास्त्र तिसको सम्यक आलोचना करने को असमर्थ जो अर्जुन तिनसे अनुग्रह करके भगवान आप ही गीताका सारसंग्रहरूप अर्थ कहि इस श्लोकसे ले तीन श्लोकके द्वारा कहते है कि उस सब गोपनीयसेभी अति गुह्यतम जो हमारे वचन सो यद्यपि प्रसङ्ग प्रसङ्गपर कहे भी गये है पर तौ भी फेर कहता हूं सो तुम सुनो और वारवार कहने में हेतुयहतेहै कि तुम हमारे दृढ कहे अत्यन्त प्रियहो इसीसे तुमारी प्रीति औहित के अर्थ फेरभी कहूंगा अथवा मेरी वाक्य को तुमने दृढ प्रमाण करके जाना और जाना इससे तुम हमें अतिप्रिय हो तो फेरि तुमारेहितके जो वचनहै सो कहूंगा ॥६४॥ अब समस्तहितोंसे बढके परमहित क्याहै इस शङ्कापर कहनेको अङ्गीकार किये हुये गीतार्थ सारको कहते है कि मन्मना कहे मतचित्त होउ और मेरही भक्त कहे आश्रित होउ औ मतयाजी कहे मेरेही पूजनकारी होउ और प्रभीको नमस्कार करो इस प्रकार से वर्त्तमान रहने पर मेरी अनुग्रहसे प्राप्त तत्त्वज्ञानके द्वारा जो हम को प्राप्त होउगे इस मे कुछ संशय न करो क्योंकि तुम हमारे प्रियपात्र हो सो इसपर तुमको सत्यप्रत्यय कहे प्रतीति जिससे होय इससे हम तुम

योऽसिमे ॥६५॥ सर्वधर्मान्परित्यज्यमामेकंशरणंव्रज। अहंत्वांसर्वपातेभ्योमोक्ष यिष्यामिमाशुचः ॥६६॥ इदन्तेनातपस्कायनाभक्तायकदाचन। नचाशुश्रूषवेवाच्यं नचमांयोऽभ्यसूयति ॥६७॥ यइमंपरमंगुह्यंमद्भक्तेष्वभिधास्यति। भक्तिंमयिपरां कृत्वामामेवैष्यत्यसंशयः ॥६८॥ नचतस्मान्मनुष्येषुकश्चिन्मेप्रियकृत्तमः। भवितान

भाषा अनुवाद

को प्रतिज्ञा करके कहते हैं ॥६५॥ पूर्व कही गुह्यतम बात से भी जो गुह्य कहे गोपनीय सो कहते हैं कि हमारी भक्तिही से सकल सिद्धि होती है इस प्रकार दृढ विश्वास करिके विधि कहे प्रारब्ध औ वेद शास्त्र के विधान का भरोसा छोडि एक हमारी ही शरण लेउ अर्थात् मेरे कहे पर विश्वास करो तो ऐसे हमारी शरणागत रूप मे वर्त्तमान तुमारे कर्म्मयोग से जो फेरि और पाप होंयगे ऐसा शोच न करना क्योंकि एक मेरे शरण मे प्राप्त तुमको मै यावत पाप से उद्धार औ मुक्त करूंगा इस से शोक दूर करो और अपना काम देखो ॥६६॥ इस प्रकार से श्रीभगवतगीता का तत्त्व अर्थ उपदेश करके अब गीता की संप्रदाय रूप प्रवर्त्तन करने मे अर्थात् दूसरे को उपदेश देने मे नियम कहते है कि हे अर्जुन इस गीताके अर्थ तत्त्व को तुम अतपस्का कहे स्वधर्म्म अनुष्ठान रहित मनुष्य से न कहना और न कभी अभक्त कहे ईश्वर गुरु तथा ब्राह्मण की भक्ति विहीन को कहना और अशुश्रूषु अर्थात् ब्राह्मण गुरु तथा ईश्वर की शुश्रूषा सेवा जो नहीं करता अथवा गीता श्रवण करने की जिसको अनिच्छा होय ऐसे मनुष्यों को भी कभी न कहियो और जो परमेश्वर स्वरूप हमारे मे मनुष्य बुद्धि लाय कर दोष आरोप करता हुआ निन्दा करै उसको भी तुमकभी न कहना यह तुम से हम प्रत्युपकार चाहते है ॥ ६७ ॥ पूर्व कहे हुये सब दर्पो से वर्जित भक्तजनों को गीतार्थ के उपदेश करनेवाले पुरुषका फल कहते है कि जो यह परम गुह्य गीतार्थ का उपदेश मेरे भक्तको करैगा सो मनुष्य मेरी पर कहे उत्तम भक्तिका अधिकारी होयगा और तदनन्तरसो मनुष्य सर्व संशयसे रहित होय हमको प्राप्त होयगा यह जानो ॥६८॥ तिसमेंहे अर्जुन उपदेश करने औ संप्रदाय चलानेवाले मनुष्यों के मध्य मे मेरा भक्त गीता का उपदेशकारी जो है उसके समान और

चमेतस्मादन्यःप्रियतरोभुवि ॥६९॥ अध्येष्यतेचयइमंधर्म्यंसम्वादमावयोः। ज्ञानय
ज्ञेनतेनाहमिष्टःस्यामिति मेमतिः ॥७०॥ श्रद्धावाननसूयश्चशृणुयादपियोनरः।
सोऽपिमुक्तःशुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥७१॥ कच्चिदेतच्छ्रुतंपार्थत्वयैका
ग्रेणचेतसा। कच्चिदज्ञानसम्मोहःप्रनष्टस्तेधनञ्जय ॥७२॥ अर्जुनउवाच। नष्टो

भाषा अनुवाद

कोई भी नहीं मेरा अत्यन्त परितोष करनेवाला है और न होगा और पृथिवी मे उससे अधिक प्रिय हमारे और कोई नही है न होगा ॥ ६९ ॥ अब गीता पाठ करने का फल कहते है कि जो मनुष्य हमारा औ तुमारा यह धर्मयुक्त संवाद नियम से पाठ करैगा सो पुरुष समस्त यज्ञों मे श्रेष्ट ज्ञानयज्ञ से हमारा पूजन किया यह मेरी निश्चित बुद्धिहै भावार्थ यह कि जो अर्थ न जानिकेभी लयके समान गीता पढैतो उसके श्रोता हम उस पर प्रसन्न होतेहैं ज्ञान अज्ञान किसी तरह से हमको स्मरण करै पर हम उसके निकट अवश्य जायंगे जैसे अजामिल औ व्याध आदिकों के निकट हम गये है ॥७० ॥ अब गीता श्रवण करने का फल कहते है कि जो कोई श्रद्धा कहे विश्वास युक्त होय केवल गीता पाठ श्रवण करै और अनसूय कहे यह मनुष्य क्यो जोरसे चिलाय के पढता है अथवा अशुद्ध निकले तो इसे टोकै ऐसे दोष न देखै ऐसे मनुष्य तावत सकल पाप से मुक्त होय अश्वमेध यज्ञ आदि कर्म करनेवाले जो लोक पावते है वे भी उसी लोक को प्राप्त होंयगे और जो अर्थयुक्त अति प्रीति पूर्वक श्रवण करैं तो वे जीवनमुक्त है औ अन्तको साक्षात् ब्रह्मस्वरूप होयंगे इसमे कुछ सन्देह वाकोनही है॥७१॥ जो सम्यक प्रकार बोध तुमको न भया हो तो हम फेर भी तुमको उपदेश करैंगे इस आशय से पूछते है कि हे पार्थ अर्जुन कहो तो मैने जो कहा सो सब एकाग्र चित्त होय तुमने सुना और हे धनञ्जय संमोह कहे तत्वज्ञान के विषय मे अज्ञान जनित तुमारी विपरीत बुद्धि नष्ट भई कि नहीं अर्थात् मेरे वचनो से अज्ञान दूर गया कि नहीं यह भगवान ने पूछा ॥ ७२ ॥ तब तो भगवत की वाणी से परम कृतार्थ होय अर्जुन कहते है कि हे अच्युत श्रीकृष्ण आपकी कृपा से अब मेरा आत्मज्ञान के विषय मे मोह नष्ट होगया और स्मृति जो ज्ञान सो पाया औ

मोहःस्मृतिर्लब्धात्वत्प्रसादान्मयाच्युत। स्थितोऽस्मिगतसन्देहःकरिष्येवचनंतव ॥७३॥
सञ्जयउवाच। इत्यहंवासुदेवस्यपार्थस्यचमहात्मनः। सम्वादमिममश्रौषमद्भुतं
रोमहर्षणम् ॥७४॥ व्यासप्रसादाच्छ्रुतवानिमंगुह्यमहंपरं। योगंयोगेश्वरात्कृ
ष्णात्साक्षात्कथयतःस्वयं ॥७५॥ राजन्संस्मृत्यसंस्मृत्यसम्वादमिममद्भुत। केशवा
र्जुनयोःपुण्यंहृष्यामिचमुहुर्मुहुः ॥७६॥ तच्चसंस्मृत्यसंस्मृत्यरूपमत्यद्भुतंहरेः।
विस्मयोमेमहान्राजन्हृष्यामिचपुनःपुनः ॥७७॥ यत्रयोगेश्वरोःकृष्णोयत्रपार्थोध

भाषा अनुवाद

आत्मस्वरूपके अनुसन्धानमे स्थिति भई अर्थात् आत्मस्वरूपका ज्ञान मेरेको प्रकाश भया और धर्मके विषयमे संदेह मेरे चित्तसे चली गई ऐसा जो मैहूं सो अब आप की आज्ञा प्रतिपालन करूंगा और युद्ध करने के लिये तयार खडा हूं जो आज्ञा होय सो अब करूं यह अर्जुन ने भगवान कहा ॥ ७३ ॥ सोई श्रीकृष्ण अर्जुन का संवाद राजा धृतराष्ट्र से सञ्जय कहते हैं कि महात्मा वासुदेव औ अर्जुन का यह अद्भुत संवाद रोंवा खडे करनेवाला मैंने जो सुना सो आपको कह सुनाया है ॥ ७४ ॥ अब सञ्जय यह वृत्तान्त अपने श्रवण करने का समाचार कहते हैं कि भगवान व्यासदेव ने हम को दिव्य चक्षु औ कर्ण दिया है कि उन्की कृपासे परम योगरूप जो परम गुह्य अर्जुन के प्रति साक्षात् योगमाया के ईश्वर श्रीकृष्णने आप अपने मुखसे कहा सो मैंने श्रवण किया और आपके प्रति भी मैंने कहा ॥७५॥ सो हे महाराज धृतराष्ट्र यह परमपवित्र केशव औ अर्जुनका अद्भुत संवाद स्मरणकरके मै वारंवार हर्षितहोताहूं अथवा वारंवार मेरे रोम खडेहोते हैं ॥७६॥ औ तत् शब्द से भगवान के विश्वरूप का निर्देश करते अर्थात् कहते हैं कि हे महाराज धृतराष्ट्र हरि श्रीकृष्णके उस अद्भुत विश्वरूपका स्मरण करि करिके हमको अत्यन्त विस्मय होती है अर्थात् आश्चर्य होता है और वारवार रोमाञ्च होता है ॥ ७७ ॥ इससे हे महाराज अब तुम अपने पुत्रों के राज्य लाभ की शंका भी परित्याग करो इस आशय पर कहते हैं कि जिसके पक्ष मे योगेश्वर श्रीकृष्ण वर्त्तमान है और जहां गाण्डीव धनुर्द्धारी अर्जुन तयार है तहांई श्री कहे राजलक्ष्मी औ विजय तथा भूति कहे उत्तर उत्तर अभिवृद्धि कहे बढ़ती औ

र्जुर्धरः । तत्रश्रीर्विजयोभूतिर्ध्रुवानीतिर्मतिर्मम ॥७८॥ इतिअष्टादशोध्यायः ॥१८॥

भाषा अनुवाद

नीति जो न्याय सोसब निश्चयकरके है ऐसी मेरी मति है इससे अब तुम पुत्रोंको साथ ले श्रीकृष्ण की शरण जायके औ पांडवों को अपना सर्वस्व दे प्रसन्नकरावते हुये अपने पुत्रों की प्राण रक्षामात्र करो यह सञ्जयने धृतराष्ट्रको कहा समझाय के ॥७८॥ इति जगन्नाथसुक्कुलविरचित मनभावनीटीकायां अष्टादशोऽध्याय ॥१८॥

अति पावनि है अनभावन को नित आवनि गावन में मन दीजै
तजि दावन माय परावन जो वैतायनआवनहूं जियलीजै
भवरोग दुरावनि ज्ञान बढावनि मुक्ति उपावनि प्रतिदिन पीजै
कामिनके मन भामिनिज्यों मनभावनित्यों मनभावनि कीजै

ज्ञानरत्नाकरयन्त्रे यन्त्रिता समाप्ताचेयं श्रीमद्भगवद्गीता
॥ सम्वत् १९२४ वैशाख कृष्ण ३ ॥

अथ अङ्गन्यास करन्यासौ

ओंश्रीगणेशायनमः ओंअस्यश्रीभगवद्गीतामालामन्त्रस्य श्रीभगवान्वेदव्यास ऋषिरनुष्टुपछन्दः श्रीकृष्णःपरमात्मादेवता अशोच्यानन्वशोचस्त्वंप्रज्ञावादांश्चभाषस इतिबीजम् सर्वधर्मान्परित्यज्यमामेकंशरणंव्रजेतिशक्तिः अहंत्वासर्वपापेभ्योमोक्ष यिष्यामिमाशुचइतिकीलकं नैनंछिन्दन्तिशस्त्राणिनैनंदहतिपावक इत्यंगुष्ठाभ्यांनमः नचैनंक्लेदयन्त्यापोनशोषयतिमारुत इतितर्जनीभ्यांनमः अच्छेद्योयमदाह्योयमक्ले द्योशोष्यएवचेतिमध्यमाभ्यांनमः नित्यःसर्वगतःस्थाणुरचलोयंसनातनइत्यनामिका भ्यांनमःपश्यमेपार्थरूपाणिशतशोथसहस्रशइतिकनिष्ठिकाभ्यांनमः नानाविधानि दिव्यानिनानावर्णाकृतीनिचेतिकरतलकरपृष्ठाभ्यांनमः इतिकरन्यासः नैनंछिन्द न्तिशस्त्राणीतिहृदयायनमः नचैनंक्लेदयन्त्यापइतिशिरसेस्वाहा अच्छेद्योयमदाह्यो यमितिशिखायैवषट् नित्यःसर्वगत.स्थाणुरितिकवचायहुं पश्यमेपार्थरूपाणीतिनेत्र

कवचायवौषट् नानाविधानिदिव्यानीत्यस्त्रायफट् श्रीकृष्णप्रीत्यर्थेजपेविनियोगः इति
षडङ्गन्यासः अथध्यानम् ॐपार्थायप्रतिबोधितांभगवतानारायणेनस्वयं व्यासेनग्र
थितांपुराणमुनिनामध्येमहाभारते अद्वैतामृतवर्षिणीं भगवतीमष्टादशाध्यायिनी
मंबत्वामनुसन्दधामिभगवद्गीतेभवद्वेषिणीम् १ नमोस्तुतेव्यासविशालबुद्धेफुल्लारविं
दायतपत्रनेत्र येनत्वयाभारततैलपूर्णः प्रज्वालितोज्ञानमयप्रदीपः २ प्रपन्नपारिजा
ताय तोत्त्रवेत्रैकपाणये ज्ञानमुद्रायकृष्णाय गीतामृतदुहेनमः ३ सर्वोपनिषदोगावोदो
ग्धागोपालनन्दनः पार्थोवत्सःसुधीर्भोक्ता दुग्धं गीतामृतंमहत् ४ वसुदेवसुतंदेवंकंसचा
णूरमर्दनं देवकीपरमानन्दं कृष्णंवन्देजगद्गुरुम् ५ भीष्मद्रोणतटाजयद्रथजलागान्धा
रनीलोत्पला शल्यग्राहवतीकृपेणवहिनीकर्णेनवेलाकुला अश्वत्थामविकर्णघोरमकरा
दुर्योधनावर्त्तिनी सोत्तीर्णाखलुपाण्डवैःकुरुनदीकैवर्त्तकःकेशवः ६ पाराशर्यवचः
सरोजममलंगीतार्थगन्धोत्कटं नानाख्यानककेशरंहरिकथासम्बोधनाबोधितं लोके
सज्जनषट्पदैरहरहःपेपीयमानंमुदा भूयाद्भारतपङ्कजंकलिमलप्रध्वंसिनःश्रेयसे ७
मूकंकरोतिवाचालंपङ्गुंलङ्घयतेगिरिंयत्कृपातमहंवन्देपरमानन्दमाधवं ८ यंब्रह्मावरु
णेन्द्ररुद्रमरुतःस्तुन्वन्तिदिव्यैःस्तवैर्वेदैःसाङ्गपदक्रमोपनिषदैर्गायन्तियंसामगाःध्याना
वस्थिततद्गतेनमनसापश्यन्तियंयोगिनो यस्यान्तंनविदुःसुरासुरगणादेवायतस्मैनमः ९

## श्रीभगवद्गीतामाहात्म्यं ।

श्रीगणेशायनमः ऋषिरुवाच गीतायाश्चैवमाहात्म्यंयथावत्सूतमेवद पुराणमुनि
नाप्रोक्तंव्यासेनमुनिनोदितम् १ सूतउवाच पृष्टंभवद्भिर्ऋषिभिर्यद्गोप्यंपुरातनम्
यच्यतेकेनवैवक्तुंगीतामाहात्म्यमुत्तमम् २ कृष्णोजानातिवैसम्यक्किञ्चित्कुन्तीसुतः
फलम् व्यासोवाव्यासपुत्रोवायाज्ञवल्क्योथमैथिलः ३ अन्येश्रवणतःश्रुत्वालेशंसंकीर्त्त
यन्तिच तस्मात्किञ्चिद्वदाम्यत्रव्यासस्यास्यान्मयाश्रुतम् ४ सर्वोपनिषदोगावोदोग्धा
गोपालनन्दनः पार्थोवत्ससुधीर्भोक्तादुग्धंगीताऽमृतंमहत् ५ सारथ्यमर्जुनस्यादौकुर्व
न्गीतामृतंददौ लोकत्रयोपकारायतस्मैकृष्णात्मनेनमः ६ संसारसागरंघोरंतर्त्तुमि
च्छतियोनरः गीतानावंसमासाद्यपारंयातिसुखेनसः ७ गीताज्ञानंश्रुतंनैवसदैवा
भ्यासयोगतः मोक्षमिच्छतिमूढात्मायातिबालकहास्यताम् ८ येशृण्वन्तिपठन्त्येवगी
ताशास्त्रमहर्निशम् नतेवैमानुषाज्ञेयादेवरूपानसंशयः ९ गीताज्ञानेनसम्बोधंकृ

ज्ञात्वालभतेमुक्तिमुत्तमां ६३ गीतेत्युच्चारसंयुक्तोम्रियमाणोगतिंलभेत् यद्यत्कर्मच
सर्वत्रगीतापाठप्रकीर्त्तितम् ६४ तत्तत्कर्मचनिर्दोषंभूत्वापूर्णत्वमाप्नुयात् पितॄनु
द्दिश्ययःश्राद्धेगीतापाठंकरोतिवै ६५ सन्तुष्टाःपितरस्तस्यनिरयाद्यान्तिस्वर्गतिं गी
तापाठेनसन्तुष्टाःपितरःश्राद्धतर्पिताः ६६ पितृलोकंप्रयान्त्येवपुत्राशीर्वादतत्पराः
गीतापुस्तकदानंचधेनुपुच्छसमन्वितम् ६७ कृत्वाचतद्दिनेसम्यक्कृतार्थोजायतेजनः
पुस्तकंहेमसंयुक्तंगीतायाःशुद्धमानसः ६८ दत्वाविप्रायविदुषेजायतेनपुनर्भवः शत
पुस्तकदानञ्चगीतायाःप्रकरोतियः ६९ सयातिब्रह्मसदनंपुनरावृत्तिदुर्लभम् गी
तादानप्रभावेणसप्तकल्पावधिंसमाः ७० विष्णुलोकमवाप्नोतिविष्णुनासहमोदते स
म्यक्श्रुत्वाचगीतार्थंपुस्तकंयःप्रदापयेत् ७१ तस्मैप्रीतोहिभगवान्ददातिमनसे
प्सितं देहंमानुषमाश्रित्यचातुर्वर्ण्येषुभारत ७२ नश्रृणोतिनपठतिगीताममृतरूपि
णीं हस्तात्त्यक्त्वाऽमृतंप्राप्तंकष्टात्क्ष्वेडंसमश्नुते ७३ पीत्वागीतामृतंलोकेलब्ध्वामोक्षं
सुखीभवेत् जनैःसंसारदुःखार्त्तैर्गीताज्ञानंचयैःश्रुतम् ७४ संप्राप्तममृतंतैश्चगतास्ते
सदनंहरेः गीतामाश्रित्यबहवोभूभुजोजनकादयः ७५ निर्धूतकल्मषालोकेगता
स्तेपरमंपदं गीतासुनविशेषोस्तिजनेषूच्चावचेषुच ७६ ज्ञानेष्वेवसमग्रेषुसमाब्रह्म
स्वरूपिणी योभिसूयतिगीतांचयोनिन्दांवाकरोतिच ७७ समेतिनरकंघोरंयावदा
भूतसंप्लवं अहङ्कारेणमूढात्मागीतार्थंनैवमन्यते ७८ कुम्भीपाकेषुपच्येतयावत्कल्प
क्षयोभवेत् गीतार्थंवाच्यमानंयोनश्रृणोतिसमीपतः ७९ सशूकरभवांयोनिमनेका
सोधिगच्छति चौर्यंकृत्वाचगीतायाःपुस्तकंयःसमानयेत् ८० नतस्यैवफलंकिञ्चि
त्पठनाच्चवृथाभवेत् यःश्रुत्वानैवगीतार्थंमोदतेपरमार्थतः ८१ नैवाप्नोतिफलंलोके
प्रमादाच्चवृथाश्रमः गीतांश्रुत्वाहिरण्यंच्चपट्टांबरवेष्टनं ८२ निवेदयेश्चतस्मैप्रीत
येपरमात्मनः वाचकंपूजयेद्भक्त्याद्रव्यवस्त्राद्युपस्करैः ८३ अनेकैर्बहुधाप्रीत्यातुष्य
तांभगवान्हरिः माहात्म्यमेतद्गीतायाःकृष्णप्रोक्तंपुरातनम् ८४ गीतान्तेपठतेयस्तु
यथोक्तफलभाग्भवेत् गीतायाःपठनंकृत्वामाहात्म्यंनैवयःपठेत् ८५ वृथापाठफलंतस्य
श्रमएवउदाहृतः एतन्माहात्म्यसंयुक्तंगीतापाठंकरोतियः ८६ श्रद्धयायःश्रृणोत्येव
दुर्लभांगतिमाप्नुयात् श्रुत्वापठित्वागीतांचमाहात्म्यंयःश्रृणोतिच ८७ तस्यपुण्यफ
लंलोकेभवेद्वैमनसेप्सितम् एवंज्ञात्वाप्रकुर्वीतगीतापाठमनुत्तमम् ८८ ।

इति श्रीभगवद्गीतामाहात्म्यं श्रीकृष्णेनार्जुनायोक्तं समाप्तम्

येषां अयमेव परमः पुरुषार्थो यः कामोपभोगः पारत्रिकं तु सुखं नास्त्येवेत्येवं निश्चितात्मानः एतत्काया-तिरिक्तस्य भोक्तुरभावात्। तथाच बार्हस्पत्ये सूत्रे "चैतन्यविशिष्टः कायः पुरुषः। काम एवैकः पुरुषार्थः" इति च ॥ ११ ॥

प० टी०—किं च—चिन्तामिति। प्रलयो मरणमेवान्तः पर्यवसानं यस्यास्तां परिमातुमशक्यां चिन्तां मनोरथसंततिमुपाश्रिताः कामा विषयास्तेषामुपभोग एव परमात्यन्तिकं प्राप्यं येषां ते एतावान्पुरुषार्थ इति कृतनिश्चयाः। श्रुतिरपि—"स यावत्येतेषामेकैकं न प्राप्नोत्यकृत्स्न एव तावन्मन्यते तस्यो कृत्स्नता" इति। भाष्यम्—तस्य पुरुषस्य, उ इति निर्धारणे, अकृत्स्नता सकलप्राप्तिराहित्यम्। तस्य कस्य? य एषां पूर्वोक्तानां विषयाणां मध्ये यावदेकैकं विषयं न प्राप्नोति तावदहमकृत्स्न एवेति मन्यतेऽहमप्राप्तसकलार्थ एवेति मन्यते ॥ ११ ॥

रा० टी०—किं च—कामेति। प्रलयान्तां मरणान्ताम्। अपरिमेयां परिमातुमशक्यां चिन्तामुपाश्रिताः कामोपभोगपरमाः काम्यमानवस्त्वनुभव एव परमो येषां ते विषयभोगैकरताः एतावदैहिकमेव फलं नान्य-दामुष्मिकमस्तीति निश्चयवन्तः ॥ ११ ॥

आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ॥
ईहन्ते कामभोगार्थमन्यायेनार्थसंचयान् ॥ १२ ॥

त० टी०—अत एव—आशेति। आशा एव पाशास्तेषां शतैर्बद्धाः इतस्तत आकृष्यमाणाः काम-क्रोधपरायणाः कामक्रोधमात्रपरमाश्रया आसुरा भवन्तीत्यर्थः। एतावता असुराणां लक्षणमुक्तमिदानीं तत्प्रवृत्तिमाह—ईहन्त इति। कामभोगार्थमन्यायेन चौर्यप्राणिवधादिनाऽर्थसंचयान् प्रति ईहन्ते चेष्टन्ते ॥ १२ ॥

म० टी०—त ईदृशा असुराः—आशेति। अशक्योपायार्थविषया अनवगतोपायार्थविषया वा प्रार्थना आशास्ता एव पाशा इव बन्धनहेतुत्वात् पाशास्तेषां शतैः समूहैर्बद्धा इव श्रेयसः प्रच्याव्येतस्तत आकृष्य नीयमानाः कामक्रोधौ परमयनमाश्रयो येषां ते कामक्रोधपरायणाः स्त्रीव्यतिकराभिलाषपरानिष्टाभिलाषाभ्यां सदा परिगृहीता इति यावत्। ईहन्ते कर्तुं चेष्टन्ते कामभोगार्थं न तु धर्मार्थमन्यायेन परस्वहरणादिना अर्थसंचयान् धनराशीन् संचयानिति बहुवचनेन धनप्राप्तावपि तत्तृष्णानुवृत्तेर्विषयप्राप्तिवर्धमानतृष्णास्वरूपो लोभो दर्शितः ॥ १२ ॥

शं० टी०—किं च—आशेति। आशापाशशतैर्बद्धाः आशा अप्राप्तार्थाभिलाषास्ता एव पाशा बन्धनरज्ज-वस्तेषां शतैर्बद्धाः। कामक्रोधपरायणाः आसुराः कामभोगार्थं कामानां स्रगादिविषयाणां भोगार्थमेव न तु दानार्थं नापि धर्मार्थं च। किं तु विषयानुभवायैव अन्यायेन शास्त्रविरुद्धेन मार्गेण कपटवञ्चनादिरूपेणार्थ-संचयान् संपाद्यानीहन्ते कुर्वन्तीत्यर्थः ॥ १२ ॥

श्री० टी०—अत एव च—आशेति। आशा एव पाशास्तेषां शतानि तैर्बद्धाः इतस्तत आकृष्यमाणाः काम-क्रोधौ परमयनमाश्रयो येषां ते कामभोगार्थमन्यायेन चौर्यादिनाऽर्थानां संचयान्राशीनीहन्ते इच्छन्ति ॥ १२ ॥

स० टी०—अशक्योपायविषया आशास्ता एव बन्धकाः ॥ पाशास्तेषां शतैर्बद्धाः श्रेयसः प्रच्युता जडाः ॥ १ ॥ साभिलाषपरानिष्टाभिलाषाभ्यां सदाऽऽवृताः ॥ चेष्टन्ते कामभोगार्थं धर्मार्थं न कथंचन ॥ २ ॥ कर्तुं ते वित्तराशींश्च परस्वहरणादिना ॥ ३ ॥ १२ ॥

भा० टी०—आसुरानेव पुनर्विशिनष्टि—आशेति। आशा अशक्योपायार्थविषया अनवगतोपायार्थवि-षया वा प्रार्थनास्ता एव बन्धनहेतुत्वात् पाशाः। आशापाशानां शतैर्बद्धा एव सन्तः श्रेयसः प्रच्याव्ये-

ततस्ततः आकृष्यमाणाः कामक्रोधपरायणाः कामक्रोधौ परमयनं आश्रयो येषां ते कामभोगार्थं कामभोगप्रयोजनाय न तु धर्मार्थमन्यायेन परस्वापहरणादिनार्थसंचयानर्थप्रचयान् ईहन्ते चेष्टन्ते ॥ १२ ॥

पु० टी०–किं च–आशापाशशतैरिति । आशा एव पाशा बन्धनरज्जवस्तेषां शतानि तैर्बद्धाः । तदुक्तम्–'आशा नाम मनुष्यस्य काचिदाश्चर्यशृङ्खला । यया बद्धाः प्रधावन्ति मुक्तास्तिष्ठन्ति पङ्गुवत्' इति । तथा कामक्रोधौ परमयनं गतिर्येषां ते कामभोगार्थं विषयभोगार्थमन्यायेन द्यूतचौर्यादिनाऽर्थसंचयान् द्रव्यसंग्रहानीहन्तेऽपेक्षन्ते ॥ १२ ॥

रा० टी०–आशेति । आशा एव पाशास्तेषां शतैर्बद्धाः कामक्रोधा एव परं अयनमेषां ते कामक्रोधपरायणाः । कामभोगार्थं काम्यविषयानुभवार्थं अन्यायेन चौर्यादिनाऽर्थसंचयान्द्रव्यसमूहानीहन्ते वाञ्छन्ति ॥ १२ ॥

**इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ॥**
**इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३ ॥**

स० टी०–तेषामर्थतृष्णां तन्मनोरथकथनेन विवृणोति–इदमद्येति । इदं धनक्षेत्रादिकं मया बुद्धिबलसामर्थ्यवता स्वसामर्थ्येनैव लब्धं न दैवादिना, इदं च धनं मनोरथं मनोऽभिलषितं स्वपौरुषेण प्राप्स्ये । इदं धनं स्वसामर्थ्यसंचितं मम गृहेऽस्ति । इदमपि मदुपायसाध्यं पुनर्भविष्यति ॥१३॥

म० टी०–तेषामीदृशी धनतृष्णानुवृत्तिं मनोराज्यकथनेन विवृणोति–इदमिति । इदं धनं अद्य इदानीमनेनोपायेन मया लब्धम्, इदं तदन्यत् मनोरथं मनस्तुष्टिकरं शीघ्रमेव प्राप्स्ये, इदं पुरैव संचितं मम गृहेऽस्ति, इदमपि बहुतरं भविष्यत्यागामिनि संवत्सरे पुनर्धनम् । एवं धनतृष्णाकुलाः पतन्ति नरकेऽशुचावित्यग्रिमेणान्वयः ॥ १३ ॥

शं०टी०–अन्यायेनार्थसंपादनपराणामासुराणां हृदये संकल्पप्रकारमाह–इदमितित्रिभिः । स्पष्टार्थाः॥१३॥

श्री० टी०–तेषां मनोराज्यं कथयन्नरकप्राप्तिमाह–इदमद्येति चतुर्भिः । प्राप्स्ये प्राप्स्यामि मनोरथं मनसः प्रियम् । शेषं स्पष्टम् । एषां च त्रयाणां श्लोकानामित्यज्ञानविमोहिताः सन्तो नरके पतन्तीति चतुर्थेनान्वयः ॥ १३ ॥

स० टी०–ईदृशीं धनतृष्णानुवृत्तिं तेषां कुचेतसाम् ॥ विवृणोति मनोराज्यकथनेन हरिः स्वयम् ॥ १॥ इदं धनं मयाऽनेनोपायेनाप्तं च संप्रति ॥ मनस्तुष्टिकरं चान्यत्प्राप्स्ये शीघ्रमिदं पुरा ॥ २ ॥ संचितं मे गृहे चास्ति बहुवित्तमिदं पुनः ॥ भविष्यत्येव सुतरं ममागामिनि वत्सरे ॥ ३ ॥ एवं तृष्णाकुला मूढा वैतरण्यादिकेऽशुचौ ॥ पतन्ति नरके घोरे नाकर्त्तं निःस्मृतिस्तवः ॥ ४ ॥ १३ ॥

भा० टी०–विवेकविरोधिनामासुराणामभिप्रायमाह–इदमिति । इदं द्रव्यं गोहिरण्यादयं इदानीं मया लब्धमिदमन्यत् मनोरथं मनस्तुष्टिकरं प्राप्स्ये प्राप्स्यामि, इदमस्ति पुरैव संचितम्, इदमपि मे पुनर्धनमागामिनि संवत्सरे भविष्यति तेनाहं धनी विख्यातो भविष्यामि ॥ १३ ॥

प० टी०–अथान्यायेनाप्यर्थलाभे केवलं मनोराज्यमेव कुर्वन्तीत्याह–इदमिति चतुर्भिः । मनोरथं मनसः प्रियशेषं प्राप्स्ये प्राप्स्यामि । शेषं स्पष्टम् । एषां त्रयाणां श्लोकानामित्यज्ञानविमोहिताः पतन्ति नरकेऽशुचाविति चतुर्थेनान्वयः ॥ १३ ॥

रा० टी०–चिन्ताप्रकारं दर्शयति–इदमित्यादिना त्रयेण । इदं धनम् अद्य मया लब्धम्, इदं मनोरथं प्राप्स्ये प्राप्स्यामि । इदं धनम् अस्ति, इदमपि धनं मे पुनर्भविष्यति ॥ १३ ॥

असौ मया हतः शत्रुर्हनिष्ये चापरानपि ॥
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ॥ १४ ॥

त० टी०–किं च–असाविति । असौ मदीयैर्दुर्जयः शत्रुः सर्वसामर्थ्यवता मया हतः । एवमपरानपि शत्रूनहं शूरो हनिष्यामि । दुर्बला हि दैवादिकं समाश्रयन्ते नाहं तथा, यत ईश्वरोऽहम् । स्वाधीनोऽहमितरेषां नियन्ताऽस्मि । अहं भोगी स्वत एव प्राप्तसर्वभोगः । सिद्धोऽहं पुत्रमित्रभृत्यादिभिराज्ञानुवर्तिभिः स्वतोऽपि बलवान् सुखी सर्वव्याधिरहितः ॥ १४ ॥

म० टी०–एवं लोभं प्रपञ्च्य तदभिप्रायकथनेनैव तेषां क्रोधं प्रपञ्चयति–असाविति । असौ देवदत्तनामा मया हतः शत्रुरतिदुर्जयः, अत इदानीमनायासेन हनिष्ये च हनिष्यामि अपरान् सर्वानपि शत्रून्, न कोऽपि मत्सकाशाज्जीविष्यतीत्यर्थः । चकारान्न केवलं हनिष्यामि तान् किं तु तेषां दारधनादिकमपि ग्रहीष्यामीत्यभिप्रायः । कुतस्तवैतादृशं सामर्थ्यं त्वत्तुल्यानां त्वदधिकानां वा शत्रूणां संभवादित्यत आह–ईश्वरोऽहं न केवलं मानुषो येन मत्तुल्योऽधिको वा कश्चित् स्यात् । किमेते करिष्यन्ति वराकाः सर्वथा नास्ति मत्तुल्यः कश्चिदित्यनेनाभिप्रायेण ईश्वरत्वं विवृणोति–यस्मादहं भोगी सर्वैर्भोगोपकरणैरुपेतः सिद्धोऽहं पुत्रभृत्यादिभिः सहायैः संपन्नः स्वतोऽपि बलवानत्योजस्वी सुखी सर्वथा नीरोगः ॥ १४ ॥

श्री० टी०–किं च–असाविति । ईश्वरो विद्याधनादिभिः समर्थः सिद्धः पुत्रैः पौत्रैः पशुभिर्धनधान्यैः संपन्नः कृतकृत्यः । शिष्टं स्पष्टम् ॥ १४ ॥

श्री० टी०–किंच–असाविति । सिद्धः कृतकृत्यः । स्पष्टमन्यत् ॥ १४ ॥

स० टी०–एवं प्रपञ्च्य तृष्णां तदभिप्रायकीर्तनात् ॥ संप्रपञ्चयति क्रोधं तेषां श्रीहरिरव्ययः ॥ १ ॥ मयाऽसौ देवदत्ताख्यो हतः शत्रुः सुदुर्जयः ॥ हनिष्याम्यपरान्सर्वानथ शत्रून्सुखेन च ॥ २ ॥ अपेरर्थस्तु मच्छत्रुः कश्च को जीवने क्षमः ॥ न केवलं हनिष्यामि किंतु तेषां धनादिकम् ॥ ३ ॥ गृहीष्यामीत्यभिप्रायश्चकाराद्‌त्र गम्यते ॥ कुतस्तवास्ति सामर्थ्यमीदृशं हि यतोऽपरे ॥ ४ ॥ त्वत्तुल्या अधिकाः किं न शत्रवस्तव चोच्यते ॥ न केवलं मनुष्योऽस्मि येन तुल्योऽधिकोऽथ वा ॥ ५ ॥ कश्चित्स्यादत एते किं करिष्यन्ति वराककाः ॥ सर्वथा नास्ति मत्तुल्यः कश्चिदन्येश्वरोऽस्म्यहम् ॥ ६ ॥ विवृणोतीश्वरत्वं च तदभिप्रायतो हरिः ॥ यतोऽहं भोगसामग्रीयुतः सिद्धोऽहमित्यतः ॥ ७ ॥ पुत्रभृत्यादिभिर्युक्तः स्वतोऽपि बलवानहम् ॥ सर्वथाहं च नीरोगोऽत्यन्तसुखैर्सतो युतः ॥ ८ ॥ १४ ॥

भा० टी०–यथोक्ते मदभिप्राये प्रतिबन्धकः शत्रुरपि न संभवतीत्याह–असाविति । असौ देवदत्तो दुर्जयः शत्रुर्मया हतः हनिष्ये चापरानन्यान् वराकान् । ननु तपस्विना, सत्त्वे कथं सर्वेषां पराभवे तव सामर्थ्यमित्याशङ्क्य किमेते करिष्यन्ति तपस्विनो यतः, सर्वथापि मत्तुल्यो नास्तीत्याह–ईश्वरोऽहम् । ऐश्वर्यातिरेकमेव प्रकटयति–भोगी सर्वभोगोपकरणवानहं सिद्धोऽहं पुत्रादिभिः संपन्नः, बलवान न केवलं मानुषबलवान् सुखी चाहमेव ॥ १४ ॥

प० टी०–किं च–असाविति । असौ वर्तमानः शत्रुर्मया हतोऽपरान् भविष्यतोऽपि शत्रून् हनिष्ये । सिद्धार्थः कृतार्थः । तदुक्तम्–' मृषा मनोरथश्रेणीमाधुर्यान्मोहितो दिवा । रात्रौ स्वाप्नं सुखं भुञ्जन्नरो जयति जीवितम् ' इति ॥ १४ ॥

रा० टी०–असाविति । असौ शत्रुर्मया हतः अपरानन्यानपि शत्रून् हनिष्ये च । अहमीश्वरः परोश्वरः भोगी ऐहिकामुष्मिकभोगसंपन्नः सिद्धः कृतकृत्यः बलवान् समर्थः ॥ १४ ॥

आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ॥
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ १५ ॥

त० टी०–किं च–आढ्य इति । आढ्यो धनधान्यसंपन्नः, अभिजनवानुत्तमकुले प्रसूतोऽहमेवास्मि । अतः कोऽन्योऽस्ति सदृशो मया, न कोऽपीत्यर्थः । ननु केचिद्यज्ञदानादिना कीर्तिमन्तो दृश्यन्ते श्रूयन्ते च तत्सादृश्यं स्यादत आह–यक्ष्य इति । यज्ञपिशाचादीन् यक्ष्ये । दास्यामि स्तावकेभ्यो नटादिभ्यः । अतो यज्ञेन दानेनाप्यहमेव सर्वेषां कीर्तिमभिभूयोत्कृष्टो भविष्यामीत्यर्थः । ततश्च मोदिष्ये हर्षं प्राप्स्यामि सखीजनैः सह । इत्येवमाद्यज्ञानेन विमोहिता विविधं मोहं वृथा मनोरथरचनात्मकं भ्रमं प्रापिताः पतन्ति नरकेऽशुचावित्युत्तरेणान्वयः ॥ १५ ॥

म० टी०–ननु धनेन कुलेन वा कश्चित्त्वत्तुल्यः स्यादित्यत आह–आढ्य इति । आढ्यो धनी अभिजनवान् कुलीनोऽप्यहमेवास्मि । अतः कोऽन्योऽस्ति सदृशो मया न कोऽपीत्यर्थः । यागेन दानेन वा कश्चित्तुल्यः स्यादित्यत आह–यक्ष्ये यागेनाप्यन्यानभिभविष्यामि, दास्यामि धनं स्तावकेभ्यो नटादिभ्यश्च । ततश्च मोदिष्ये मोदं हर्षं लप्स्ये नर्तक्यादिभिः सहेत्येवमज्ञानेनाविवेकेन विमोहिता विविधं मोहं भ्रमपरंपरां प्रापिताः ॥ १५ ॥

श्री० टी०–किं च–आढ्य इति । आढ्यो बहुधनसंपन्नः अभिजनवाननूचानः यक्ष्ये प्रतिष्ठार्थं धनार्थं जीवनार्थं वा यागं करिष्यामि दास्यामि स्तावकेभ्यो नटविटादिभ्यो न तु श्रोत्रियेभ्यो बन्धुभ्यश्च मोदिष्ये दत्त्वा भुक्त्वा संतोषं प्राप्स्यामीत्येवमज्ञानविमोहिताः सदसद्विवेकाभावोऽज्ञानं तेन विविधं मोहिताः मोहं प्राप्ताः ॥ १५ ॥

श्री० टी०–किंच–आढ्य इति । आढ्यो धनादिसंपन्नः । अभिजनवान् कुलीनः । यक्ष्ये यागाद्यनुष्ठानेनापि दीक्षितान्तरेभ्य. सकाशान्महतीं प्रतिष्ठां प्राप्स्यामि । दास्यामि स्तावकेभ्यः । मोदिष्ये हर्षं प्राप्स्यामीत्येवमज्ञानेन विमोहिताः मिथ्याभिनिवेशं प्रापिताः ॥ १५ ॥

स० टी०–कश्चिद्धनेन किं न स्यात्त्वत्तुल्योऽत्र कुलेन वा ॥ इत्यत्राह धनी यस्मादहमेव न मत्समः ॥ १ ॥ कुलीनोऽप्यहमेवास्मि न कश्चिन्मत्समोऽपरः ॥ यागेन वाऽथ दानेन न कोऽप्यस्तीह मत्समः ॥ २ ॥ अन्यानभिभविष्यामि यागेनाहं तथापरान् ॥ दानेन स्तावकेभ्योऽहं धनं दास्यामि पुष्कलम् ॥ ३ ॥ हर्षं लप्स्ये ततोऽहं वै नर्तक्यादिभिरेव च ॥ इत्येवमविवेकेन प्रापिता बहुविभ्रमम् ॥ ४ ॥ १५ ॥

भा० टी०–पुनरप्यासुराणामभिप्रायं वर्णयति–आढ्य इति । आढ्यो धनेन । अभिजनवान सप्तपुरुषं श्रोत्रियत्वादिसंपन्नोऽहमस्मि, तस्मान्मया धनाढ्येन कुलीनेन सदृशस्तुल्योऽन्यः कोऽस्ति ? न कोऽपीत्यर्थः । किंच यागदानाभ्यां तत्फलेन चान्येभ्योऽधिको भविष्यामीत्याह–यक्ष्ये यागेनाप्यन्यानभिभविष्यामि । दास्यामि नटस्तावकादिभ्यो । मोदिष्ये हर्षं चातिशयं यागदानफलं प्राप्स्यामि । दानादिना चापरानभिभविष्यामीत्येवमज्ञानेन विमोहिता. विविधं मोहिताः अविवेकभावमापन्नास्तथा चैषामभिप्रायोऽसाधीयान् कदापि नोपादेय इति भावः ॥ १५ ॥

प० टी०–किं च–आढ्य इति । आढ्यो धनसमृद्धः, अभिजनवान् कुलीनः, मया सदृशः कोऽस्ति कोऽपि नास्तीत्यर्थः । अथासामर्थ्येऽपि व्यर्थमनोरथानाह–यक्ष्ये इति । यक्ष्ये यागं करिष्ये, दास्यामि तुच्छभावादिदानं करिष्ये, एवं लोकोत्तरकरणेन मोदिष्ये हर्षं प्राप्स्यामीत्यज्ञानेन विमोहिता मिथ्याभिनिवेशं प्रापिताः ॥ १५ ॥

रा० टी०—आढ्येति । आढ्यः धनादिसंपन्नः अभिजनवान्कुलीनोऽस्मि । मया सदृशोऽन्यः कोऽस्ति? न कोऽपि । यक्ष्ये यागादिधर्माननुष्ठास्यामि । भूरिदक्षिणान्नादि दास्यामि । मोदिष्ये संतोषं प्राप्स्यामि इत्येवंरूपेणाज्ञानविमोहिताः ॥ १५ ॥

**अनेकचित्तविभ्रान्ता मोहजालसमावृताः ॥**
**प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १६ ॥**

त० टी०—एवं ते किं फलं प्राप्नुवन्तीत्यपेक्षायामाह—अनेकेति । सर्वकर्मफलप्रदात्रीश्वरसीहाय्यमृते स्वस्यैव सामर्थ्यमवकल्प्यैतत्कुर्यामित्थं कुर्यामिदमनुभूयामित्यनेकचित्तविभ्रान्ता अनेकेषु विषयेषु चित्तं तेन विभ्रान्ता विक्षिप्ता एवं मोहरूपेण जालेन समावृताः सूत्रमयेन जालेनावृता मत्स्या इव कामभोगेषु प्रसक्ता अभिनिविष्टाः सन्तोऽशुचौ विण्मूत्रश्लेष्मादिपूर्णे रौरवादौ नरके पतन्ति ॥ १६ ॥

म०–टी०—अनेकेति । उक्तप्रकारैरनेकैश्चित्तैस्तत्तद्दुष्टसंकल्पैर्विविधं भ्रान्ताः, यतो मोहजालसमावृताः मोहो हिताहितवस्तुविवेकासामर्थ्यं तदेव जालमावरणात्मकत्वेन बन्धहेतुत्वात्, तेन सम्यगावृताः सर्वतो वेष्टिताः मत्स्या इव सूत्रमयेन जालेन परवशीकृता इत्यर्थः । अत एव स्वानिष्टसाधनेष्वपि कामभोगेषु प्रसक्ताः सर्वथा तदेकपराः प्रतिक्षणमुपचीयमानकल्मषाः पतन्ति नरके वैतरण्यादौ अशुचौ विण्मूत्रश्लेष्मादिपूर्णे ॥ १६ ॥

शं० टी०—एवं कामसंकल्पैर्विविधभावापन्नानां कामपराणां तत्प्रवृत्तेः फलमाह—अनेकेति । अनेकचित्तविभ्रान्ताः इदमद्य मया लब्धमित्येवंरूपैरनेकविधैश्चित्तविकारैर्विभ्रान्ता विविधं भ्रान्ताः, मोहजालसमावृताः मोहः सदसद्विवेकाभावः स एव जालं मत्स्यानामिवावरणात्मको नाशकश्च तेन सम्यगावृतास्तिरोहितविवेकास्तत एव कामभोगेषु विषयसेवायामेव प्रसक्ताः प्रकर्षेण सक्ताः परिनिष्ठितान् क्वचित्स्वधर्मे तत एवाशुचौ श्लेष्मपूयहृदादिरूपत्वादशुद्धे नरके रौरवादौ पतन्ति ॥ १६ ॥

श्री० टी०—एवंभूता यत्प्राप्नुवन्ति तच्छृणु—अनेकेति । अनेकेषु मनोरथेषु प्रवृत्तं चित्तमनेकचित्तं तेन विभ्रान्ता विक्षिप्ताः । तेनैव मोहमयेन जालेन समावृताः मत्स्या इव सूत्रमयेन जालेन यन्त्रिताः । एवं कामभोगेषु प्रसक्ताः अभिनिविष्टाः सन्तोऽशुचौ कश्मले नरके पतन्ति ॥ १६ ॥

स० टी०—तत्तद्दुष्टैकसंकल्पैरनेकैः प्रागुदीरितैः ॥ कामिनो विविधं भ्रान्ता मोहजालेन वेष्टिताः ॥१॥ हिताहिताविवेकाख्यावरणेनातिवेष्टिताः ॥ मत्स्या इव हि सौत्रेण जालेन विवशीकृताः ॥ २ ॥ स्वानिष्टसाधनेष्वेव कामभोगेषु तत्पराः ॥ प्रतिक्षणं वर्धमानकल्मषा नरकेऽशुचौ ॥ ३ ॥ पतन्ति श्लेष्मविण्मूत्रपूर्णे वैतरणीमुखे ॥ ४ ॥ १६ ॥

भा० टी०—एवमभिप्रायवन्तः आसुराः कृत्याकृत्यविवेकहीनाः कस्मिंल्लोके गच्छन्तीत्याकाङ्क्षायामाह—अनेकेति । अनेकचित्तविभ्रान्ताः उक्तप्रकारैरनेकैश्चित्तैस्तद्दुष्टसंकल्पैर्विभ्रान्ताः विविधं भ्रान्ताः मोहजालसमावृताः कार्याकार्यहिताहितसारासारहेयोपादेयाविवेकाख्यो मोहः, स एव जालमिवावरणात्मकत्वात् तेन सम्यगावृताः पक्षिण इव सूत्रमयेन जालेन बन्धनं गताः, प्रसक्ताः कामभोगेषु कामानां विषयाणामुपभोगेषु प्रकर्षेण सक्ता आसक्तिं गताः तत्रैव निमग्नाः एतादृशाः सन्तस्तेनोपचीयमानकल्मषा अशुचौ विण्मूत्रादिपूर्णे वैतरण्यादिरूपे नरके पतन्ति ॥ १६ ॥

प० टी०—किं च—अनेकेति । अनेकेषु व्यर्थमनोरथेषु प्रवृत्तं चित्तमनेकचित्तं तेन विशेषतो भ्रान्ताः तेषामुद्धारः कदापि नास्तीत्याह—मोहजालसमावृता इति । यथा सूत्रमयजालान्तः प्रविष्टानां मत्स्यानाम-

निर्गमस्तथा मोहजालसमावृतात्मा कामभोगेषु प्रकर्षेण सक्ता अशुचौ कश्मलरूपे नरके पतन्ति। अत्रेतदुक्तं भवति—"तुल्या व्यवहारतः सर्वा स्वप्नजागृदवस्थयोः। एकस्यावसरेऽन्यस्य यन्मिथ्यात्वं प्रतीयते" इति वैतथ्योपनिषदुक्तम्। श्रुतिभिः स्वाप्नव्यवहारदृष्टान्तेन जागृद्व्यवहारस्यापि मिथ्यात्वं दर्शितमासीदिदानीं तस्य स्वरूपेणैव मिथ्यात्वं मनोरथरूपत्वेन भगवता विस्तरेण प्रकटीकृतम्। तत्र मनोरथो द्वेधा संभावितोऽसंभावितश्च, तत्र दैनंदिनान्नपानादिविषयभोगमनोरथः संभावितः। सोऽपि दैवाधीनत्वात्साक्षिकः। असंभावितस्तु राज्यप्राप्त्यादिसकलभोगैर्मनोरञ्जनम्। एवमस्य मिथ्याभूतत्वं जानन्तोऽपि मनोरथपरंपरामातन्वन्ति तेषामुद्धारः कदापि नास्तीत्यर्थः। तदुक्तं टिप्पणिकासु—'स्वप्ने सुखं तु खमसत्यमेव तथापि तस्यानुभवस्तदानीम्। तथैव शुक्तौ रजतस्य मिथ्या मनोरथोऽयं तु विनाऽनुभूतिम्॥ १॥ सर्वतस्त्वनुभूतामरित्वोऽपि स्यान्मनोरथमयो व्यवहारः। शुक्तिवत्त्वनुभवादनुवेलं तन्मृषात्वमुदितं मुनिवर्यैः॥ २॥' इति। तदुक्तं विष्णुपुराणे सौभर्याख्याने—'मनोरथानां न समाप्तिरस्ति वर्षायुतेनाप्यथवापि लक्षैः। पूर्णेषु पूर्णेषु पुनर्नवानामुत्पत्तयः सन्ति मनोरथानाम्॥ १॥ पद्भ्यां गता यौवनिनश्च जाताः दारैश्च संयोगमिताः प्रसूताः। दृष्टाः सुतास्तत्तनयप्रसूतिं द्रष्टुं पुनर्वाञ्छति मेऽन्तरात्मा॥ २॥ यज्जीवितो नैव मनोरथानामन्तोऽस्ति विज्ञातमिदं मयाद्य। मनोरथासक्तिपरस्य चित्तं न जायते वै परमार्थसंगति॥ ३॥' इति॥ १६॥

रा० टी०—एवं चिन्ताप्रकारमुक्त्वा तेषां फलमाह—अनेकेति। अनेकचित्तविभ्रान्ताः अनेकधा चिन्तायुक्तमनसा विशेषभ्रान्तिमन्तः पुत्रमित्रादिविषयमोहाख्यजालेन समावृताः विषयभोगेष्वतितरामासक्ताः सन्तः अशुचौ नरके पतन्ति॥ १६॥

**आत्मसंभाविताः स्तब्धा धनमानमदान्विताः॥**
**यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम्॥ १७॥**

त० टी०—यक्ष्य इत्यादिना यस्तेषां यज्ञदानाद्यभिमान उक्तः सोऽपि केवलं धर्मध्वजित्वाय न तु शास्त्रविधिविषय इत्याह—आत्मसंभाविता इति। आत्मनैव संभाविताः आत्मनैवात्मानं श्रेष्ठं मन्यमाना अत एव स्तब्धा अनम्राः। तत्र हेतुः—धनमानमदान्विताः। धनेन मानो गर्वः मदश्चोद्दर्पस्ताभ्यामन्विताः सन्तस्ते नामयज्ञैर्याज्ञिका दीक्षिता इति यष्टृत्वख्यापनाय ये यज्ञास्ते नामयज्ञाः, अथवा नाममात्रयज्ञैर्यज्ञाभासैर्यजन्ते। कथं? दम्भेन, न तु सात्त्विकश्रद्धया। अविधिपूर्वकं विधिहीनं यथा भवति तथेत्यर्थः॥ १७॥

म० टी०—ननु तेषामपि केषांचिद्वैदिके कर्मणि यागदानादौ प्रवृत्तिदर्शनादयुक्तं नरके पतनमिति नेत्याह—आत्मेति। सर्वगुणविशिष्टा वयमित्यात्मनैव संभाविताः पूज्यतां प्रापिता न तु साधुभिः कैश्चित्। स्तब्धा अनम्राः। यतो धनमानमदान्विताः धननिमित्तो यो मान आत्मनि पूज्यत्वातिशयाध्यासः तन्निमित्तश्च यो मदः परस्मिन् गुर्वादावप्यपूज्यत्वाभिमानस्ताभ्यामन्वितास्ते नामयज्ञैर्नाममात्रैर्यज्ञैर्न तात्त्विकैर्दीक्षिताः सोमयाजीत्यादिनाममात्रसंपादकैर्वा यज्ञैरविधिपूर्वकं विहिताङ्गेतिकर्तव्यतारहितैर्दम्भेन धर्मध्वजितया न तु श्रद्धया यजन्ते। अतस्तत्फलभाजो न भवन्तीत्यर्थः॥ १७॥

श्री० टी०—ननु तेषामपि ब्राह्मणत्वेन श्रुताध्ययनाध्यापनसंभवाद्वेदोक्तकर्मानुष्ठानसंभवाच्च कथमेतेषां वैदिकानामशुचिनरकपात इत्याशङ्कायां—न। "श्रद्धयाग्निः समिध्यते" इति "यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति" इत्यादिश्रुत्युक्तलक्षणाभावात्तैरविधिना क्रियमाणयज्ञैर्यज्ञाभासैरेवेश्वरः प्रीयते इति मोहप्रवृत्तत्वाच्चैषामासुराणां नरकप्रापणमेव सिद्धमिति प्रतिपादयति—आत्मेति द्वाभ्याम्। धनमा-

नमदान्विताः मानो गर्वः मदो मत्तता धनोत्कर्षसमुत्पन्नौ मानमदौ ताभ्यां समन्वितास्तत एवात्मसंभाविता आत्मना स्वेनैव न तु कचिदपि शिष्टैः संभाविताः बहुकृतास्तत एव स्तब्धा उद्धताः नम्रताशून्यास्ते आसुरा नामयज्ञैर्नाम्ना यज्ञैर्नतु वैदिकक्रियया लक्षणेन वा किंत्वाभासयज्ञैरविधिपूर्वकं नियतकालमन्त्रहोमर्त्विग्विवर्जितं दम्भेन स्वमहत्त्वप्रसिद्ध्यै यजन्ते नत्वीश्वरप्रीतिसिद्ध्यै ॥ १७ ॥

श्री० टी०—यक्ष्य इति च यस्तेषां मनोरथ उक्तः स केवलं दम्भाहंकारादिप्रधान एव न तु सात्त्विक इत्यभिप्रायेणाह—आत्मसंभाविता इति द्वाभ्याम् । आत्मनैव संभाविताः पूज्यतां नीताः न तु साधुभिः कैश्चित् । अत एव स्तब्धा अनम्राः । धनेन यो मानो मदश्च ताभ्यामन्विताः सन्तस्ते नाममात्रेण ये यज्ञास्ते नामयज्ञाः। यद्वा दीक्षितः सोमयाजीत्येवमादिनाममात्रप्रसिद्धये ये यज्ञास्तैर्यजन्ते। कथम् ? दम्भेन न तु श्रद्धया, अविधिपूर्वकं च यथा भवति तथा ॥ १७ ॥

स० टी०—तेषामपि हि केषांचिद्वैदिके शुभकर्मणि ॥ प्रवृत्तिर्यागदानादौ दृश्यतेऽतो न सांप्रतम् ॥ १ ॥ नरके पतनं तेषामित्याशङ्कयाह तत्र च ॥ सर्वैर्गुणैर्विशिष्टाः स्मो वयमित्यात्मनैव ते ॥ २ ॥ पूज्यतां प्रापिता मूढैर्न तु कैश्चित्सुसाधुभिः ॥ अनम्रा धनहेतुर्यो मानस्तद्धेतुको मदः ॥ ३ ॥ तेनान्विता मखैर्नाममात्रैरुक्ताङ्गवर्जितैः ॥ धर्मध्वजितया मूढा यजन्ते श्रद्धया न तु ॥ ४ ॥ अतो न फलभाजस्ते यागैरविधिपूर्वकैः ॥ किं तु संसृतिभाजस्ते क्रूराः क्रूरविचेष्टिताः ॥ ५ ॥ १७ ॥

भा० टी०—ननु तेषामपि केषांचिद्वैदिककर्मणि यागादौ प्रवृत्तिदर्शनात् कथं सर्वेषां वैतरण्यादौ पतनमिति चेत्तत्राह—आत्मसंभाविताः सर्वगुणविशिष्टा वयमित्यात्मनैवात्मनि संभाविताः पूज्यतां गताः न तु साधुभिः। स्तब्धाः अप्रणतात्मानोऽनम्राः धनमानमदान्विताः धननिमित्तो मानो मदश्च ताभ्यां धनमानमदाभ्याम् अन्विताः। इदं चाप्युपलक्षणं धनमानानिमित्तो यो मदस्तेनान्विता इत्यस्यापि। नामयज्ञैर्नाममात्रैर्यज्ञैस्ते यजन्ते, यतो दम्भेन धर्मध्वजितयाऽविधिपूर्वकं विहिताङ्गेतिकर्तव्यतापूर्वकं यथा न भवति तथेत्यर्थः ॥ १७ ॥

प० टी०—आत्मेति। आत्मना स्वेनैव संभाविताः पूज्यतां नीता नान्यैः कैश्चित्। तावतैव स्तब्धा अनम्राः धनमानाभ्यां मदो गर्वस्तेनान्विताः सन्तो दम्भेन यज्ञैर्यजन्ते न परमार्थबुद्ध्या । तथापि यज्ञफलं प्राप्स्यन्त्येवेति चेत्तत्राह—अविधिपूर्वकमिति। द्रव्यपात्राद्यशुद्धिरविधिस्तत्पूर्वकं कर्म फलाय न भवतीत्यर्थः ॥ १७ ॥

रा० टी०—यागादि कुर्वतां कथं नरके पात इत्यत आह—आत्मेति । आत्मनैव स्वेनैव संभाविताः बहुमताः वयं पूज्या इति मन्यमाना इति यावत् । अत एव स्तब्धाः, अनम्राः धननिमित्तगर्वदर्पाभ्याम् उपेतास्ते अविधिपूर्वकं दम्भेन स्वमहित्वप्रदर्शननिमित्तेन यज्ञैर्ज्योतिष्टोमादिभिर्यजन्ते नाम । न कृतार्थबुद्ध्या अतो नरकप्राप्तिस्तेषामिति भावः ॥ १७ ॥

अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः ॥
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८ ॥

त० टी०—अविधिपूर्वकत्वं ( च ) स्वभाववैपरीत्यादित्याह—अहंकारमिति । अनात्मनि पाञ्चभौतिके आत्मत्वाभिमानोऽहङ्कारस्तं संश्रिताः । बलं परपीडाकरणसामर्थ्यं, दर्पं दर्पो नाम स्वस्य पूज्यत्वातिशयबुद्ध्याऽन्यानादरस्तं, कामं स्त्र्यादिभोगासक्तिं, क्रोधं स्वपरसंतापजननरूपमन्तर्ज्वलनमेतान् दोषान् संश्रिताः मामीश्वरमात्मपरदेहेषु तत्तद्बुद्धिसाक्षितया वर्तमानं प्रद्विषन्तो मच्छासनातिक्रमः प्रद्वेषस्तं कुर्वन्तः अभ्यसूयकाः सन्मार्गवर्तिनां सतां गुणेषु दोषारोपकाः ॥ १८ ॥

म० टी०—यक्ष्ये दास्यामीत्यादिमङ्कल्पेन दम्भाहङ्कारादिप्रधानेन प्रवृत्तानामासुराणां वहिरङ्गसाधन-

